न्वा अपि[1] स्तोमो न व्याप्त[2] इति ह स्माह पैङ्ग्यो यदृग्भिरेव स्तोमो न व्याप्नुव्य[3] इत्यृचर्ऐहै वा ऋक्स्तोमं व्यश्नुते ऽर्चर्ऐहै निविद्या पुरोरुग्वर्चं व्याप्तो ह वा उ तत्र स्तोमो भवति यत्र निविद्या पुरोरुग्वा शस्यते तस्माद्वद एव[4] तृचमाज्यं स्यादिति यद्दः पैङ्ग्यस्य वचस[5] उभे इति त्वेव स्थितमेतेन ह विश्वामित्रश्च वसिष्ठश्च समजानतामभिसंजानते ह वा अस्मै स्वाश्रैष्ठ्याय य एवं वेद तस्मादुभे एव स्यातां वासिष्ठं पूर्वं वैश्वामित्रमुत्तरम्[6] ॥ १४ ॥

आ वायो भूष शुचिपा उप न इति वायव्यं चैन्द्रवायवं चागतेति गतवत्तदन्तरूपमन्तो नवममहरेतीव वा अन्तं गत्वा कश्चन्द्र हि तत इयात्प्र सोता जीरो अध्वरेष्वस्थादिति स्थितवत्तदन्तरूपमन्तो नवममहस्तिष्ठतीव वा अन्तं गत्वा कश्चन्द्र हि तत इयाद्दिवि क्षयन्ता रजसः पृथिव्यामिति मैत्रावरुणं क्षयन्तेति क्षितवत्तदन्तरूपमन्तो नवममहः क्षियतीव वा अन्तं गत्वा कश्चन्द्र हि तत इयादा विश्ववाराश्विना गतं न इत्याश्विनं प्र तत्स्थानमवाचि वां पृथिव्यामिति स्थितवत्तदन्तरूपमन्तो नवममहस्तिष्ठतीव वा अन्तं गत्वा कश्चन्द्र हि तत इयादिन्द्रं नरो नेमधिता हवन्त इत्यैन्द्रं यत्पार्या युनजते धियस्ता इति पार्याः पराध्योस्तदन्तरूपमन्तो नवममहरन्ते ऽन्तं दधात्यूर्ध्वो अग्निः सुमतिं वस्वो अश्रेदिति वैश्वदेवमश्रेदिति श्रितवत्तदन्तरूपमन्तो नवममहः श्रियतीव वा अन्तं गत्वा कश्चन्द्र हि तत इयात्प्र क्षोदसा धायसा सस्र एषेति सारस्वतं प्रबाबधानेति निनृत्तिरन्तो नवममहर्नीव वा अन्तं गत्वा नृत्यति कश्चन्द्र हि तत इयादेते वा उ त्रैष्टुभास्तृचक्लृप्ता वासिष्ठाः प्रउगाः प्रजापतिर्वै वसिष्ठः स तन्ता यज्ञस्य स पुनस्ततावयातयामा भवति प्रजापतावेव तत्सर्वान्कामानृध्नुवन्ति बृहत्पृष्ठं राथंतरं शस्त्रं तन्मिथुनं प्रजात्यै रूपम् ॥ १५ ॥

---

1) so M, न्वाभि K, न्वापि die übrigen Hss. und C 2) तस्याप्तव्य M. 3) व्याप्यत M, न व्याप्त K. 4) तस्माद्व्याप्यत एव । तृच° M. 5) वचसा M. 6) M ins. त्रैष्टुभः प्रउगः.

त्र्यर्यमा मनुषो देवतातेति त्रैष्टुभानां प्रथमं मरुत्वतीयानां त्रीति तत्तृतीयस्याह्नो रूपमिन्द्रो रथाय प्रवतं कृणोतीति द्वितीयं यमध्यस्थान्मघवा वाजयन्तमित्यध्यस्थादिति स्थितवत्तदन्तरूपमन्तो नवममहस्तिष्ठतीव वा अन्तं गत्वा कद्यङ् हि तत इयात्तिष्ठा हरी रथ आ युज्यमानेति तृतीयं तिष्ठेति स्थितवत्तदन्तरूपमन्तो नवममहस्तिष्ठतीव वा अन्तं गत्वा कद्यङ् हि तत इयाद्गायत्साम नभन्यं यथा वेरिति चतुर्थं सामेति तदमुष्य लोकस्य रूपं प्र मन्दिने पितुमदर्चता वच इति जागतं पञ्चमं तस्य तदेवान्तरूपं यत्सोदर्कमा सत्यो यातु मघवाँ ऋजीषीति त्रैष्टुभानां प्रथमं निष्केवल्यानामव स्य शूरेति निनृत्तिरन्तो नवममहर्नीव वा अन्तं गत्वा नृत्यति कद्यङ् हि तत इयादस्मा इदु प्रतवसे तुरायेति द्वितीयमस्मा अस्मा इति सम्प्रभृति यथा वै सोदर्कमेवं सम्प्रभृत्यन्तरूपं द्यौर्न य इन्द्राभिभूमार्य इति तृतीयं द्यौरिति तदमुष्य लोकस्य रूपं तत्त इन्द्रियं परमं पराचैरिति चतुर्थं परमं पराचैरिति निनृत्तिरन्तो नवममहर्नीव वा अन्तं गत्वा नृत्यति कद्यङ् हि तत इयादहं भुवं वसुनः पूर्व्यस्पतिर्विश्वजिते धनजिते स्वर्जित इति द्वे जागते अहमहमिति सम्प्रभृति यथा वै सोदर्कमेवं सम्प्रभृत्यन्तरूपं जिते जित इति निनृत्तिरन्तो नवममहर्नीव वा अन्तं गत्वा नृत्यति कद्यङ् हि तत इयात्पञ्च सूक्तानि मरुत्वतीये शस्यन्त उत्तमे छन्दोमे पशवो वै छन्दोमाः पाङ्क्ताः पशवः पशूनामेवाप्त्यै षडन्ततो निष्केवल्ये षड्वा ऋतवः संवत्सरः संवत्सरस्यैवाप्त्यै ॥ १६ ॥

अभि त्वा देव सवितरिति सावित्रमभीत्येव वा असौ लोकस्तदमुष्य लोकस्य रूपं प्र वां महि द्यवी अभीति द्यावापृथिवीयं महि द्यवी अभीति निनृत्तिरन्तो नवममहर्नीव वा अन्तं गत्वा नृत्यति कद्यङ् हि तत इयादिन्द्र इषे ददातु न इत्येका तेनो रत्नानि दत्तनेति द्वे इत्यार्भवमेकमेकं सुशस्तिभिरित्येकमेकमिति निनृत्तिरन्तो नवममहर्नीव वा अन्तं गत्वा नृत्यति कद्यङ् हि तत इयादथ वैश्वदेवं

मनुः सर्व आयुर्वै मनुरायुरेव तद्यज्ञे च यजमानेषु च दधात्यत्रैव द्विपदास्तासामुक्तं ब्राह्मणं विश्वे देवास आगतेति वैश्वदेवमागतेति गतवत्तदन्तरूपमन्तो नवममहरैतीव वा अन्तं गत्वा कव्यङ् हि तत इयाद्गायत्रं गायत्रतृतीयसवनो ह्येष त्र्यहो दिविपृष्ठो अरोचतेति वैश्वानरीयं दिवीति तदमुष्य लोकस्य रूपं मरुतो यस्य हि क्षय इति मारुतं क्षय इति क्षितवत्तदन्तरूपमन्तो नवममहः क्षियतीव वा अन्तं गत्वा कव्यङ् हि तत इयादग्निर्होता पुरोहित इति जातवेदसीयं क्षयं पावक शोचिष इति क्षितवत्तदन्तरूपमन्तो नवममहः क्षियतीव वा अन्तं गत्वा कव्यङ् हि तत इयाद्गायत्रं गायत्रतृतीयसवनो ह्येष त्र्यह इत्याग्निमारुतसूक्तानीत्येतस्याह्नः सूक्तानि तदुक्थ्यं संतिष्ठते तस्य साम्निर्या तृतीयस्याह्नो ऽन्वहं द्विपदाः शस्यन्ते सर्वेषु च्छन्दोमेषु पशवो वै छन्दोमा यजमानच्छन्दसं द्विपदा अधिष्ठायामेव तत्पशूनां यजमानान्दधात्यधीव वै पशून्पुरुषस्तिष्ठति पुरुषस्तिष्ठति ॥ १७ ॥

॥ इति षड्विंशो ऽध्यायः समाप्तः ॥

यद्व्युपरि तद्दशममहरिति ह स्माह कौषीतकिस्तस्मात्तदविवाक्यं भवति न हि तद्वा वेद कश्चन नेदविद्वान्निर्ब्रवाणीति मितमेतद्देवकर्म यद्दशममहरनुष्टुबेव स यो व्याह सो ऽतिरेचयतीश्वरो विवक्तारं श्रेषो ऽन्वेतोस्तदु वा आहुर्व्येव ब्रूयान्नन्दति ह वै यज्ञो विदुषागच्छता यन्मे समृद्धं भविष्यत्ययं मे तत्समर्धयिष्यतीति यदि कश्चित्प्रमत्त उपहन्याद्यस्तदधीयात्स तं देशं पार्श्वतः स्वाध्यायमधीयीतापि वा गृहपतिर्वर्त्विजां वैकः पर्यवसर्पेत्स तं देशं पार्श्वतः स्वाध्यायं शंसेद्यदि तथा न मन्येत संप्रत्येव विब्रूयादुत्सृज्यते दशमे ऽहन्यनुष्टुब्वागनुष्टुप्सैषा वाक्प्र तदोऊषी[1] क्रूरवहेव[2] भवति तस्मादुत्सृज्यते नेद्वाचमासीदामेत्यथो सर्वाण्येवैत[3]च्छन्दांस्यनुष्टुभमभिसंपादयन्ति तदेनां नाहैवाभिमृशे शूद्रां नो

1) वाक्वृतदोऊषी M. 2) क्रूरवेह o Corr., क्रूरवेव C. 3) अथेतराणि M.

एनां प्रसिस्हचाणि नो त्वेवान्यत्र यामकि[1] पुंश्चल्या अयनं मे अस्तीत्यनुष्टुब्भ्येषा दशमे ऽहन्परिगीता तदाङ्गर्नानुष्टुभ आयतनं रिञ्च्याद्विराजस्तत्रानुब्रूयात्समानं वा एतच्छन्दो यद्विराट् चानुष्टुप्च न ह्येकेनाक्षरेणान्यच्छन्दो भवति नो द्वाभ्यामिति तयोर्वा एतयोस्तृचयोः षडक्षराण्यभ्युद्यन्त्यग्निष्टोमसाम्नः स्तोत्रियानुरूपयोः षट् तानि द्वादशाक्षराणि होता प्रातरनुवाके संपादयेन्नाद्रियेतात्रैव संपन्नमुष्णिगुदेतीति मेनिमहे गायत्री वा तां प्रातरनुवाके संपादयेन्नाद्रियेतात्रैव संपन्नम् ॥ १ ॥

अग्ने तमद्याश्वं न स्तोमैरित्याज्यं तदेतत्स्पष्टं दशमायाह्ने न संपादयेन्नाद्रियेतात्रैव संपन्नं माधुच्छन्दसः प्रउगस्तस्योक्तं ब्राह्मणं त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्यतिच्छन्दसा मरुत्वतीयं प्रतिपद्यते सा संपन्ना चतुःषष्ट्यक्षरा ते द्वे अनुष्टुभौ संपद्येते बृहदिन्द्राय गायत प्र व इन्द्राय बृहत इति सूक्तात्पूर्वौ द्वौ प्रगाथौ पिन्वन्त्यपीयया संशंसतीति तत्संपन्नं जनिष्ठा उग्रः सहसे तुरायेत्यैकाहिकं मरुत्वतीयं प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एव कया नश्चित्र आभुवत्कया त्वं न ऊत्येति वामदेव्यस्य योनौ रथंतरमूढं भवत्याग्नेयं सामैन्द्रीषु तन्मिथुनं प्रजात्यै रूपं यावन्तः प्रगाथास्तावन्त्यौष्णिहानि तृचानि धाय्यामन्या द्विपदा भजते सप्तदशीमन्या सूक्तस्य तत्संपन्नमिन्द्रस्य नु वीर्याणि प्रवोचमित्यैकाहिकं निष्केवल्यं प्रतिष्ठा वा एकाहः प्रतिष्ठा दशममहः प्रतिष्ठानीयं वै छन्दो द्विपदे प्रतिष्ठित्या एवाभि त्यं देवं सवितारमोण्योः कविक्रतुमित्यतिच्छन्दसा वैश्वदेवं प्रतिपद्यते सा संपन्ना चतुःषष्ट्यक्षरा ते द्वे अनुष्टुभौ संपद्येते अभिवाननुचरस्तस्योक्तं ब्राह्मणं तत्र पुरस्तादानोभद्रीयस्य प्रशुक्रीयं शंसति प्रतिष्ठा वा एकाहः प्रतिष्ठा दशममहः प्रतिष्ठानीयं वै छन्दो द्विपदाः प्रतिष्ठित्या एव विराड्ढु वामदेव्यमग्निष्टोमसाम भवति श्रीर्विराडन्नाद्यं श्रियो विराजो ऽन्नाद्यस्योपा-

---

1) यामक M.

ष्या अथो शान्तिर्वै भेषजं वामदेव्यं शान्तिरेवैषा भेषजमन्ततो यज्ञे क्रियते ॥ २ ॥

अथ यत्समूढस्यातिरिक्तोक्थमुपयन्ति तेनातिरिक्तोक्थमाप्नुवन्त्यथैष दशमस्याह्नो दोहो यथा सहस्रं पञ्चदश चानुष्टुभः स्युस्तथैतदहः संपादयेत्पञ्चदशोद्धृत्य शतस्य शतस्य चतस्रश्चतस्र उद्धरति ताः पञ्चपञ्चाशदुद्धृता अथेतरे त्रिंशद्वात्रिंशद्वर्गा अथैषा स्तोमाक्षरानुष्टुबष्टाक्षरा गायत्री चतुर्विंशः स्तोम इत्येषा स्तोमाक्षरानुष्टुब्द्वात्रिंशी भवत्यथैषा पद्यानुष्टुब्गायत्र्यै चोष्णिहश्च षट् पदानि विराजस्त्रीणि तानि नव बृहत्यै चत्वारि तानि त्रयोदश पङ्क्तेः पञ्च तान्यष्टादश त्रिष्टुभश्चत्वारि तानि द्वाविंशतिर्जगत्यै चातिच्छन्दसश्चाष्टौ तानि त्रिंशद्विपदायै द्वे तानि द्वात्रिंशदित्येषा पद्यानुष्टुब्द्वात्रिंशी भवत्यथैषा देवक्या[1]नुष्टुबष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रो द्वात्रिंश इत्येषा देवक्या[1]नुष्टुब्द्वात्रिंशी भवत्यथ याः पञ्चपञ्चाशदुद्धृताश्चतुश्चत्वारिंशत्ताः पङ्क्तयस्ततो याश्चत्वारिंशत्तदूधो ऽथ याश्चतस्रो ऽतियन्ति ते स्तनाः सैषा स्तोमाक्षरानुष्टुबेतेनोधसैतैः स्तनैरेतमिन्द्रस्यात्मानं त्र्यहमहरभिक्षरत्येतस्या उ एव व्यक्षरेण च्छन्दोमाः स्तोमतश्च शस्त्रतश्च वर्धन्ते य उ वै वेद तन्मयः संभवति य एवंविदस्यायुषः परस्तादेतमिन्द्रस्यात्मानं त्र्यहमहरभिसंभवति तमेषा स्तोमाक्षरानुष्टुबेतेनोधसैतैः स्तनैः सर्वै रसैः सर्वैः कामैः सर्वेणान्नाद्येन सर्वेणामृतत्वेनाभिक्षरति य एवं संपन्नं दशममहः शंसति तस्मादेवं संपन्नं दशममहः शंसेदिति ॥ ३ ॥

अथ यद्व्यूढस्यातिरिक्तोक्थमुपयन्ति मन एव तत्प्रीणन्ति तत्सर्वयज्ञैरनुशंसन्त्येषा हि मनसो मात्रा संस्थिते दशमे ऽहनि पुरा पत्नीसंयाजेभ्य एतस्मिन्काले संप्रसर्पन्त्ययज्ञिया वै पत्न्यो बहिर्वेदि हि ता इति वदन्तः संस्थितेषु पत्नीसंयाजेष्विति त्वेव स्थितमत्राल्पको भ्रातृ-

---

1) देवत्या° M.

व्यलोकः परिशिष्टो भवतीति ते संप्रसृप्य सार्पराज्ञ्य ऋक्षु स्तुवत इयं वै सार्पराज्ञीयं हि सर्पतो राज्ञ्यथो वाग्वै सार्पराज्ञी वाग्घि सर्पतो राज्ञ्यथो गौर्वै सार्पराज्ञी गौर्हि सर्पतो राज्ञ्यायं गौः पृश्निरक्रमीदित्येतं तृचं नान्तरियात्स्तोत्रियस्यानन्तरित्या अस्मासु नृम्णं धा इत्यन्नं वै नृम्णमन्नमेव तद्यज्ञे च यजमानेषु च दधाति वातापेर्हवि[1]वनश्रुत इतीन्द्र उ वै वातापिः स हि वातमाप्त्वा[2] शरीराण्यर्हन्प्रतिपरैत्यध्वर्युः सो ऽनिरुक्ते गार्हपत्ये प्राजापत्ये द्वे आहुती जुहोति प्रजापतिर्वै गार्हपत्य आहुतिसंस्थे उ वै स्तुतशस्त्रे समाप्तं स्तोत्रं समाप्तं शस्त्रं समाप्तं ब्रह्मवद्यमित्यथो अन्ये[3] वापि कामं यजेयुरथ भक्षयेयुरयं वै वेनः प्रजापतेः प्रत्यक्षं तन्वस्ता होता वदेत् ॥ ४ ॥

अन्नादी चान्नपत्नी चेयं वा अन्नाद्यसावन्नपत्नी भद्रा च कल्याणी च भद्रा तत्सोमः कल्याणी तत्पशवो ऽनिलया चापभया चानिलया तद्वायुर्न ह्येष इलयत्यपभया तन्मृत्युर्न ह्येष बिभेत्यनाप्ता चानाप्या चेयं वै पृथिव्यनाप्तासौ द्यौरनाप्यानाधृष्टा चानाधृष्या चायं वा अग्निरनाधृष्टो ऽसावादित्यो ऽनाधृष्यो ऽपूर्वा चाभ्रातृव्या चापूर्वा तन्मनो ऽभ्रातृव्या तत्संवत्सरो ऽथासावेव गृहपतिर्यो ऽसौ तपत्येष हि गृहाणां पतिस्तस्यर्तव एव गृहा एष पतिरेष उ एव देवो ऽपहतपाप्मोदग्द्रवत्यध्वर्युरपिदधाति[4] सदसो द्वाराविवं शालायाः[5] ॥ ५ ॥

औदुम्बरीमन्वारभन्त ऊर्ग्वा अन्नाद्यमुदुम्बर ऊर्जो ऽन्नाद्यस्योपाप्त्या उत्तमौ पाणी होता कुर्वीतोत्तमो ऽसानीत्युत्तमो हैव भवति वाग्यताः संमील्यासत आ नक्षत्राणां दर्शनाद्वाचं ह वा एतदाप्याययन्ति यद्वाचंयमा आसत आपीनां वाचमभ्यासिक्तामन्तत ऋध्नवामेति मार्जालीयन्यन्तेन नक्षत्रेषु चक्षुर्विसृजन्ते ज्योतिर्वै नक्षत्राणि ज्योतिरेव

---

1) वातापे ह° OoC. 2) वातमात्मा OoC, वाचमात्मा K. 3) अतो ऽन्ये L, अतो ऽन्वेवापि M. 4) °दधाति M. 5) द्वारौ शालायास्य M.

तदात्मन्दधते ते परया द्वारा हविर्धाने प्रपद्यन्ते ऽथाध्वर्युरुत्तरस्य हविर्धानस्य कूबरीमभिपद्याह सत्त्रस्यर्द्धिं गायेति गायति सत्त्रस्यर्द्धिं तत्सत्त्रस्यर्द्धिमाप्नुवन्ति सर्वे साम्नो निधनमुपयन्ति प्रतिष्ठा वै निधनं प्रतिष्ठित्या एव त उत्तरस्य हविर्धानस्याधोक्षं सर्पन्त्यैन्द्रीमतिच्छन्दसं जपन्तो ऽतिच्छन्दसैव तदधोक्षं यजमानाः पाप्मानमपघ्नते ते न्वा उ वयमुत्तरेणैव[1] परीम इति[2] ह स्माह कौषीतकिर्यज्ञस्यानुसंचरं सप्त-ऋषिभ्यो ऽनन्तर्हिता इति ते ऽग्रेण हविर्धाने समुपविश्य कामान्ध्यायन्ते यत्कामा भवन्त्ययं नः कामः समृध्यतामिति स उ हैभ्यः कामः समृ-ध्यते ये बहुकामा भवन्ति भूर्भुवः स्वरित्येतास्ते व्याहृतीर्जपेयुस्ते प्राञ्च उदञ्च उत्क्रम्य वाचं विसृजन्ते नेद्वाक्पराच्यसदिति सुब्रह्मण्यायै वाचं विसृजन्ते ब्रह्म वै सुब्रह्मण्या ब्रह्मणैव तद्वाचं विसृजन्त त आग्नीध्रीये सह राज्ञा संविशन्ते तद्यथा राजानं वा राजमात्रं वा श्रान्तं वेश्म प्रपादयेयुरेवमेवैतत्सोमं राजानमहरहर्हविर्धानाभ्यामुपावहृत्याग्नीध्रं प्र-पादयन्ति त आग्नीध्रीये सह राज्ञा संविशन्ते ॥ ६ ॥

अथ यत्समूढं दशरात्रमुपयन्ति सर्वेषामेव कामानामाप्त्या अथ यद्व्यूढमुपयन्ति सर्वेषामेव च्छन्दसामाप्त्या अथ यद्व्यूढसमूढा उपयन्ति दशरात्रस्यैव नानात्वाय समूढ उ हैवाग्र आस तानि च्छन्दांस्य-न्योन्यस्य स्थानमभिदध्युः सर्वाणि प्रथमानि स्याम सर्वाणि मध्यमानि सर्वाण्युत्तमान्यथो सर्वाण्येवैतच्छन्दांसि सर्वसवनभाञ्जि करोति गाय-त्रप्रातःसवनः प्रथमस्त्र्यहस्त्रिष्टुम्मध्यंदिनो जगत्तृतीयसवनो जगत्प्रातः-सवनो द्वितीयस्त्र्यहो गायत्रमध्यंदिनस्त्रिष्टुप्तृतीयसवनस्त्रिष्टुप्प्रातःसव-नस्तृतीयस्त्र्यहो जगन्मध्यंदिनो गायत्रतृतीयसवनो गायत्रप्रातःसवनं दशममहस्तत्समानाच्छन्दसः समानं छन्द उपसंगच्छन्ते ऽथ यद्दशम-महरनुष्टुभमभिसंपादयन्ति वाग्वा एतदहर्वागनुष्टुब्वाच्येव तद्वाचं प्रति-

---

1) M ins. हविर्धाने. 2) परिमेति M.

छापयन्ति ते ऽमृतत्वमाप्नुवन्ति ये दशममहरुपयन्ति ये दशममहरुप-यन्ति ॥ ७ ॥

॥ इति सप्तविंशो ऽध्यायः समाप्तः ॥

प्रजापतिर्ह यज्ञं ससृजे तेन ह सृष्टेन देवा ईजिरे तेन हेष्ट्वा सर्वान्कामानापुस्तस्य हेतरार्ध्यमुपनिदधुर्य एते प्रैषाश्च निगदाश्चाथेतरेण यज्ञेन ऋषय ईजिरे ते हविर्जज्ञुरसर्वेण वै यज्ञेन यजामहे न वै सर्वान्कामानाप्नुम इति ते ह श्रेमुस्त एतान्प्रैषांश्च निगदांश्च ददृशुस्तेन ह संप्रैषेण सनिगदेनेष्ट्वा सर्वान्कामानापुरेते ह ते[1] ह वा उ प्रैषाश्च निगदाश्च यदृग्भिर्यज्ञस्यानाप्तं तदेभिः सर्वमाप्स्याम इति तानेतान्प्रैषानु[2]प्रैषान्विश्वामित्रो ददर्शाथो पुरोडाशप्रैषानथेतर ऋषय इतरांस्तदाहुः कस्मान्मैत्रावरुण एव सर्वेभ्यः प्रेष्यतीत्येता ह वै देवताः प्रैषाणामाजिमीयुस्तां मित्रावरुणा उज्जिग्यतुस्तस्मान्मैत्रावरुण एव सर्वेभ्यः प्रेष्यति स वै तिष्ठन्प्रेष्यति तिष्ठन्वै वीर्यवत्तमस्तिष्ठन्वा उ श्रुतवदनतमो वीर्यवतीमाश्रितां देवेषु वाचमुद्यासमिति ॥ १ ॥

कुवक्र इव प्रणतो ऽनुब्रूयात्तथा ह वर्षुकः पर्जन्यो भवतीति ह स्माह कौषीतकिस्तद्व स्म वै पुरासुररक्षांसि हवींषि विबध्नते[3] तत एता वामदेवो ऽभिरूपा अपश्यदग्निर्होता नो अध्वर इति ताभिर्हाग्निं परिणिन्युस्[4] ततो वै तानि रक्षांसि नाष्ट्रा अपजघ्निरे जुषस्व सप्रथस्तममिति जुष्टवतीमभिरूपामन्वाह जुष्टवतीमभिरूपां देवेषु वाचमुद्यासमितीमं नो यज्ञममृतेषु धेहीति विश्वामित्रः स्तोकानेवैताभिरग्नये स्वदयत्येता ह वा उ तेषां पुरोनुवाक्या एता याज्यास्तस्मादभिरूपा भवन्ति वैश्वामित्रीं पुरोडाशस्विष्टकृतः पुरोनुवाक्यामन्वाह तस्या उक्तं ब्राह्मणं वैश्वामित्रीरनुसवनं पुरोडाशानां पुरोनुवाक्या अन्वाह वि-

1) एतावते M. 2) प्रैषानु om. M. 3) विमथ्नते M. 4) परिनिण्युस् OoLK, परिनिन्युस् M, परिणिण्युस् C.

श्वामित्रो हैतान्पुरोडाशप्रैषान्ददर्श सलोमतायै माधुच्छन्दस्यावभिरूपे द्विदेवत्यानां प्रथमस्य पुरोनुवाक्ये अन्वाह मधुच्छन्दा हैतान्द्विदेवत्यप्रैषान्ददर्श सलोमतायै गार्त्समदीं च मैधातिथीं चोत्तरयोरभिरूपे अन्वाह मैधातिथीः प्रातःसवन उन्नीयमानेभ्यो ऽन्वाह मेधातिथिर्ह प्रातःसवन इन्द्राय सोमं प्रोवाच ता वा आवत्यो हरिवत्यो भवन्ति पुरोनुवाक्यारूपेण ता वा ऐन्द्र्यो भवन्त्यैन्द्रो हि यज्ञक्रतुस्ता वै गायत्र्यो भवन्ति गायत्रं प्रातःसवनं ता वै नवान्वाह नव न्वा अत्र चमसानुन्नयन्ति ॥ २ ॥

षडु हैके प्रातःसवन उन्नीयमानेभ्यो ऽन्वाहुः स्वयमच्छावाकः सप्तमीं सप्त सप्तोत्तरयोः सवनयोः सप्त वै प्राञ्च आसीना वषट्कुर्वन्तीति वदन्तस्तदु वा आहुर्यथासूक्तमेवमेवानुब्रूया[1]द्धोतुर्ह्येवैताः पुरोनुवाक्या भवन्ति होतुर्ह्येवैतांश्चमसाननुचमसमुन्नयन्ति तस्माद्यथासूक्तमेवानुब्रूयादथ[2] होत्राः संयजन्ति तासामुक्तं ब्राह्मणं मित्रं वयं हवामह इति मैत्रावरुण्या मैत्रावरुणः स्वया[3] देवतया यज्ञमुखस्यानवरार्ध्या इन्द्र त्वा वृषभं वयमित्यैन्द्र्या ब्राह्मणाच्छंस्यैन्द्रो हि यज्ञक्रतुर्मरुतो यस्य हि क्षय इति मारुत्या पोता यत्र ह तदिन्द्रं मरुतः पुपुवुस्तदेनानिन्द्रः सोमपीथे ऽन्वाभेजे तस्मात्स मारुत्या पोता प्रथमतश्चान्ततश्च यजत्यग्ने पत्नीरिहावहेत्याग्निपात्नीवत्या त्वष्टृमत्या नेष्टा प्रथमतश्चान्ततश्च यजत्यग्निर्वै[4] देवानां पात्नीवतो नेष्ट ऋत्विजां तस्मात्स आग्निपात्नीवत्या त्वष्टृमत्या नेष्टा प्रथमतश्चान्ततश्च यजत्युक्षान्नाय वशान्नायेत्याग्नेय्याग्नीध्रो ऽग्नीन्ह स समिन्द्धे तस्मात्स आग्नेय्याग्नीध्रः प्रथमतश्चान्ततश्च यजत्यनुवषट्कुर्वन्त्याहुतीनामेव शान्त्या आहुतीनां प्रतिष्ठित्या अथेडाथ होतृचमसस्तस्योक्तं ब्राह्मणम् ॥ ३ ॥

अथ यत्र ह तन्नाभानेदिष्ठो मानवो ऽङ्गिरःसूपहवमीषे स

1) वदन्तस्तद्वै खलु यथासूक्तमनुब्रूयाद् M. 2) तस्माद्यथासूक्तमेवानुब्रूयाद् om. M. 3) स्वयैव M. 4) त्वष्टा वै M.

एतामच्छावाकीयां होत्रां ददर्श स वा इडायामुपहूतायामाजगाम तस्मात्तन्न प्रवृणुते स वा एतस्मात्पूर्वस्मादवान्तरदेशादाजगाम तस्मादेतस्यां दिश्यासीनो ऽच्छावाक उप[1]हवमिच्छते तदाहुः कस्मादच्छावाकाय पुरोडाशवृगलं परिहरन्तीत्यलीकयुर्ह वाचस्पतो नैमिषीयाणां दीक्षोपसत्सु ब्रह्मास स ह प्रसुते ऽच्छावाकीयां चकार ते होचुरस्मै वा इमं पुरा ब्रह्मभागं परिहरामः कस्मा एनं परिहरामेति ते होचुरस्मा एवैनं परिहरतेति तं तस्मै पर्यहरन्त्स एष ब्रह्मभाग एवाथो इडाभाजो वा इतरे चमसास्तस्मादच्छावाकाय पुरोडाशवृगलं परिहरन्ति चमसस्यैवापरीडतायै ॥ ४ ॥

अथैनमध्वर्युराहाच्छावाक वदस्व यत्ते वाद्यमित्यच्छावाकोपहवमिच्छस्वेत्येवैनं तदाहाच्छा वो अग्निमवस इत्याग्नेयीरन्वाहाग्नेयं प्रातःसवनं ता वा अनुष्टुभो भवन्ति गायत्री वै सा यानुष्टुब्गायत्रमग्नेश्छन्दस्ता वै तिस्रो भवन्ति त्रिवृद्वा अग्निरङ्गारा अर्चिर्धूम[2] इत्युत्तमायै तृतीये वचने प्रणवेन निगदमुपसंदधाति यजमान होतरध्वर्यो ऽग्नीद्ब्रह्मन्पोतर्नेष्टरुतोपवक्तरिति प्रशास्ता वा उपवक्तापि वा ऋचाभ्युदितमुपवक्ता जनानामितीषे षयध्वमूर्जो ऽर्जयध्वमित्यन्नं वा इषमन्नमूर्जमन्नेन समुत्तध्वमित्येवैनांस्[3] तदाह नि वो जामयो जिहता न्यजामय इति यत्र जामि यत्राजामि तद्वो निजिहतामित्येवैनांस्तदाह तदेतदृचाभ्युदितम् ॥ ५ ॥

जामिमजामिं प्रमृणीहि शत्रूनिति नि सपत्ना यामनि बाधितास इति निहता वः सपत्नाः समरण इत्येवैनांस्तदाह जेषथाभीत्वरीं जेषथाभीत्वर्या इति सेना वा अभीत्वरी सेनया सेनां जयतेत्येवैनांस्तदाह अवद्व इन्द्रः शृणवद्वो ऽग्निरिति शृणोतु व इन्द्रः शृणोत्वग्निरित्याशिषमेव तद्वदते प्रस्थायेन्द्राग्निभ्यां सोमं वोचतो यो अस्मान्ब्राह्म-

---

1) °वाकोप° OLK. 2) so M, °रार्चिर्धूम OoL. 3) °नं त° LoK.

णान्ब्राह्मणा ह्वयध्वमिति सर्वेष्वेवैतदुपहवमिच्छत उपहवमयं ब्राह्मण इच्छते ऽच्छावाको वेत्यध्वर्युराह तं होतरुपह्वयस्वेति तं होतोपह्वयते स हि तेषां श्रेष्ठी भजते यं वै श्रेष्ठ्युपह्वयते स उपहूत इति ह स्माह ॥ ६ ॥

प्रत्यस्मै पिपीषत इत्यच्छावाक उन्नीयमानायान्वाह ता वै चतस्रो भवन्ति चतुष्टयं वा इदं सर्वमस्यैव सर्वस्याप्त्यै ता वा अनुष्टुभो भवन्ति संशंसायै बृहत्युत्तमा भवति श्रीर्वै बृहती श्रियामेव तदन्ततः प्रतितिष्ठति प्रातर्यावभिरागतमित्यैन्द्राग्न्या यजत्यैन्द्राग्नं ह्यस्योक्थं भवति गायत्र्या गायत्रं प्रातःसवनमनुवषट्करोत्याहुतीनामेव शान्त्या आहुतीनां प्रतिष्ठित्या अनवानं प्रातःसवने यजेयुरिति ह स्माह पैङ्ग्यः क्षिप्रं देवेभ्यो हविः प्रदास्याम इत्यर्धर्चश इति कौषीतकिरेतद्वै छन्दसां पर्व यदर्धर्चः पर्वश एव तद्देवेभ्यो हविः प्रयच्छन्ति ॥ ७ ॥

अथात ऋतुप्रैषाणामेव मीमांसा कण्वो हैतानृतुप्रैषान्ददर्श मेधातिथिर्याज्याः काण्वो ह वै मेधातिथिस्तेन तौ मृत्युं पाप्मानमपजिघ्नाते स य इच्छेन्मृत्युं पाप्मानमपहन्यामित्येताभिर्यजेत ॥ ८ ॥

पुरुषो वै यज्ञस्तस्य वागेवाज्यं सा वा एकैव भवति तस्मादेकदेवत्यमाज्यं शंसति प्राणाः प्रउगं ते वा इमे बहवः प्राणास्तस्माद्बह्वो देवताः प्रउगे शस्यन्ते बाहू मैत्रावरुणश्चाच्छावाकश्च तौ वै द्विगुणौ भवतस्तस्मात्तौ प्रातःसवने द्विदेवत्याः शंसत इयमेव वेना सेवनी मध्यं ब्राह्मणाच्छंसी तस्माद्ब्राह्मणाच्छंसी प्रातःसवन एकदेवत्याः शंसत्यात्मा मध्यंदिनः स वा एक एव भवति तस्मान्मध्यंदिने होत्राशंसिन एकदेवत्याः शंसन्ति होता च निष्केवल्यमूरू मैत्रावरुणश्चाच्छावाकश्च तौ वै द्विगुणौ भवतस्तस्मात्तौ तृतीयसवने द्विदेवत्याः शंसत इदमेव शिश्नं मध्यं ब्राह्मणाच्छंसी तस्माद्द्विरूपं[1] जायते स्त्री च पुमांश्च तस्माद्ब्राह्म-

1) तस्माद्विरूपं LMK.

णाच्छंसी तृतीयसवने द्विदेवत्याः शंसति ब्राह्मणाच्छंसी भूयिष्ठाः शंसत्यात्मा वै ब्राह्मणाच्छंसी तस्मादिदमात्मनो मध्यं स्थविष्ठम् ॥ ९ ॥

अथ यद्दावन्तः स्तोत्रियानुरूपा भवन्ति तत्प्रथमस्याह्नो रूपं वैश्वामित्रौ मैत्रावरुणस्य चाच्छावाकस्य च स्तोत्रियौ भवतो वासिष्ठौ नवर्चौ पर्यासावन्तावेवैतत्सदृशौ कुर्वतः स्तोत्रियाञ्छस्त्वा श्वःस्तोत्रियाननुरूपान्कुर्वन्त्यहीनरूपतायां अहीनसंतत्या अहरेव तदह्नो ऽनुरूपं कुर्वन्त्यहर्वा अह्नो ऽनुरूपं तदाहुः कस्मात्स्तुतमनुशस्यते कस्मात्स्तोममतिशंसन्तीति न ह वै तत्स्तुतं भवति यन्नानुशस्यते न स स्तोमो देवान्गच्छति यो नातिशस्यते तस्मात्स्तुतमनुशस्यते तस्मात्स्तोममतिशंसन्ति चतुराहावानि शस्त्राणि पशवो वा उक्थानि चतुष्टया वै पशवो ऽथो चतुष्पादाः पशूनामेवाप्त्या ऐकाहिका उक्थयाज्याः प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एवानुवषट्कुर्वन्त्याहुतीनामेव शान्त्या आहुतीनां प्रतिष्ठित्या आहुतीनां प्रतिष्ठित्यै ॥ १० ॥

॥ इत्यष्टाविंशो ऽध्यायः समाप्तः ॥

अथ यत्र ह तत्सर्वचरौ देवा यज्ञमतन्वत तान्हार्बुदः काद्रवेयो माध्यंदिन उपोदास्थ्योवाचैका वै व इयं होत्रा न क्रियते ग्रावस्तोत्रिया तां वो ऽहं करवाण्युप मा ह्वयध्वमिति ते ह तथेत्यूचुस्तं होपजुह्विरे स एता ग्रावस्तोत्रिया अभिरूपा अपश्यत्प्रैते वदन्तु प्र वयं वदामेति प्रवदत्सु प्र हि ते वदन्त्यथ यत्र बृहद्बृहदिति बृहद्वदन्ति मदिरेण मन्दिनेति तत्र वि षू मुञ्चा सुषुवुषो मनीषामिति विमुञ्चत्सु ता वै चतुर्दश भवन्ति दश वा अङ्गुलयश्चत्वारो ग्रावाण एतदेव तदभिसंपद्यन्ते ता वै जगत्यो भवन्ति जागता वै ग्रावाणो ऽथ यस्त्रिष्टुभा परिदधाति तेनो माध्यंदिने त्रिष्टुबुपाप्ता स वै तिष्ठन्नभिष्टौति तिष्ठन्तीव वै ग्रावाणः स वा उष्णीष्यपिनद्धाक्षो ऽभितुष्टाव तस्माद्वा अप्येतर्ह्युष्णीष्येव ग्राव्णो ऽभिष्टौत्यथो खल्वाहुश्चक्षु-

रियाय[1] स सर्प आस तदृत्विजो विषमपीयाय स एताः पावमानीर्विषापवदनीरभितुष्टाव तद्यत्पावमानीर्विषापवदनीरभिष्टौति यज्ञस्यैव शान्त्यै यजमानानां च भिषज्यायै ॥ १ ॥

अथ स्तुते पवमाने दधिघर्मेण चरन्त्यत्र कालो हि भवत्यथो सवनस्यैव सरसताया अथ हविष्पङ्क्त्या चरन्ति तस्या उक्तं ब्राह्मणं वासिष्ठीर्मध्यंदिन उन्नीयमानेभ्यो ऽन्वाह वसिष्ठो ह मध्यंदिन इन्द्राय सोमं प्रोवाच ता वा आवत्यो हरिवत्यो भवन्ति पुरोनुवाक्यारूपेण ता वा ऐन्द्र्यस्त्रिष्टुभो भवन्त्यैन्द्रं हि त्रैष्टुभं माध्यंदिनं सवनं ता वै दशान्वाह दश न्वा अत्र चमसानुन्नयन्त्यथ होत्राः संयजन्ति तासामुक्तं ब्राह्मणमैन्द्रीभिस्त्रिष्टुब्भिर्मध्यंदिने प्रस्थितानां यजन्त्यैन्द्रं हि त्रैष्टुभं माध्यंदिनं सवनमनुवषट्कुर्वन्त्याहुतीनामेव शान्त्या आहुतीनां प्रतिष्ठित्या अथेडाय होतृचमसस्तस्योक्तं ब्राह्मणं हुतेषु दाक्षिणेषु दक्षिणा नीयन्ते तासामुक्तं ब्राह्मणं वैश्वामित्रीं मरुत्वतीयग्रहस्य पुरोनुवाक्यामन्वाह तस्या उक्तं ब्राह्मणम् ॥ २ ॥

वामदेव्यं मैत्रावरुणस्य पृष्ठं भवति शान्तिर्वै भेषजं वामदेव्यं शान्तिरेवैषा भेषजं यज्ञे क्रियते नौधसं ब्राह्मणाच्छंसिनस्तद्धि निधनवद्भवति प्रतिष्ठा वै निधनं प्रतिष्ठित्या एव कालेयमच्छावाकस्य तद्वा ऐडं बृहतीषु कुर्वन्ति पशवो वा इडा पशवो बृहती बार्हताः पशवः पशूनामेवाप्त्या अथैतान्त्सामप्रगाथांश्छंसन्ति तथैषां होतुर्न्यायादनितं भवति पञ्चर्चे मैत्रावरुणस्य चाच्छावाकस्य चोकथमुखे भवत एकादशर्चौ पर्यासावन्तावेवैतत्सदृशौ कुर्वतो विश्वामित्रस्य च वामदेवस्य च मैत्रावरुणः शंसति वामदेवो ह्यस्य पर्यासो भवति विश्वामित्रस्य च वसिष्ठस्य च ब्राह्मणाच्छंसी वासिष्ठो ह्यस्य पर्यासो भवति भरद्वाजस्य च विश्वामित्रस्य चाच्छावाको वैश्वामित्रो ह्यस्य पर्यासो भवति ते वै

1) °श्चक्षुर्हाह Mo (Corr. aus चक्षुरियाय), °श्चक्षुर्हास K.

चतुर्णामृषीणां शंसन्त्याचतुरं वै द्वंद्वं मिथुनं प्रजननं प्रजात्यै वैश्वामित्रे मैत्रावरुणस्य च ब्राह्मणाच्छंसिनश्चोक्थमुखे भवतः पर्यासो ऽच्छावाकस्य वाग्वै विश्वामित्रो वाचैव तत्सर्वतो यज्ञं तन्वत इत्येतद्ब्राह्मणं प्रायणीयोदयनीययोरैकाह्यं च भवति ॥ ३ ॥

वामदेव्यं मैत्रावरुणस्याहरहः पृष्ठं भवति शान्तिर्वै भेषजं वामदेव्यं शान्तिरेवैषा भेषजमहरहर्यज्ञे क्रियते ऽथैतान्कद्वतः प्रगाथानहरहः शंसन्ति को वै प्रजापतिः प्रजापतावेव तदहरहः प्रतितिष्ठन्तो यन्त्यथो अशान्तानि वा एते अहीनसूक्तान्यन्यान्यन्यान्युपयुञ्जाना यन्ति तान्येवैतैः कद्वद्भिः प्रगाथैरहरहः शमयन्तो यन्त्यथैतास्त्वक्थ्यास्त्रिष्टुभ उक्थ[1]प्रतिपदो ऽहरहः शस्यन्ते बलं वै वीर्यं त्रिष्टुब्बल एव तद्वीर्ये ऽहरहः[2] प्रतितिष्ठन्तो यन्त्यप प्राच इन्द्र विश्वाँ अमित्रानिति सौकीर्तो मैत्रावरुणो ऽपनुत्तवतीं पाप्मन एवापनुत्त्यै[3] यदार्षेये सूक्ते तदार्षेये उक्थमुखीये इतरयोर्ब्रह्मणा ते ब्रह्मयुजा युनज्म्युरुं नो लोकमनुनेषि विद्वानित्युक्थमुखीये ब्रह्मवत्युरुवत्यौ ब्रह्मणि चैव तदुरुगाये चाहरहः प्रतितिष्ठन्तो यन्ति ॥ ४ ॥

अथैतानि शिल्पानि मध्यमे त्र्यहे शस्यन्ते शिल्पवाँ ह्येष मध्यमस्त्र्यहो भवति विराजश्च वैमदश्च[4] चतुर्थे ऽहन्वैराजं हि चतुर्थमहः पङ्क्तयश्च महापङ्क्तयश्च पञ्चमे ऽहन्पाङ्क्तं हि पञ्चममहरतिच्छन्दसः षष्ठे ऽहन्नातिच्छन्दसं हि षष्ठमहरथो अपृष्ठं वा एतद्यदन्यत्र बृहत्यै क्रियते च्यवन्त उ वा अत्र बृहत्यै पृष्ठानि शिल्पेष्वेव तदहरहः प्रतितिष्ठन्तो यन्त्यथो अन्तरिक्षं वा एष मध्यमस्त्र्यहो ऽनारम्भणं वा इदमन्तरिक्षमप्रतिष्ठानं शिल्पेष्वेव तदहरहः प्रतितिष्ठन्तो यन्ति तानि वै तृचानि भवन्ति त्रिवृद्वै शिल्पं नृत्यं गीतं वादितमिति तेष्वेव तदहरहः प्रतितिष्ठन्तो यन्ति मा चिदन्यद्विशंसत मा भेम मा अमिष्मेति मैधातिथं

---

1) उक्थ्य° LoB. 2) चाहरहः OoBK. 3) °नुत्यै alle Hss. 4) वैमध्यस्य LoK.

मैत्रावरुणस्य दशमे ऽहन्पृष्ठं भवति न हि तस्य प्रागदशमादह्नो बृहतीषु पृष्ठं भवत्येकस्या वै श्रीः श्रीर्वै बृहती श्रियामेव तदन्ततः प्रतितिष्ठति द्विपदाः शस्त्वैकाहिकानि शंसन्ति प्रतिष्ठा वा एकाहः प्रतिष्ठा दशममहः प्रतिष्ठानीयं वै छन्दो द्विपदाः प्रतिष्ठित्या एव ॥ ५ ॥

नौधसं ब्राह्मणाच्छंसिनस्तस्योक्तं ब्राह्मणं गायत्रीषु ब्राह्मणाच्छंसिने प्रणयन्ति षष्ठे ऽहन्नैवतस्यैवाह्नो रूपेणाहीनरूपताया अहीनसंतत्या अहीनान्त्सर्वान्कामानाप्नुम इति न ह्यत्र किंचन ह्रियत उदु ब्रह्माणीरत श्रवस्येत्यहरहः पर्यास ऋतवो वा उदुब्रह्मीयमृतुष्वेव तदहरहः प्रतितिष्ठन्तो यन्ति ता वै षड् भवन्ति षड्वा ऋतव ऋतुष्वेव तदहरहः प्रतितिष्ठन्तो यन्ति ॥ ६ ॥

कालेयमच्छावाकस्य तस्योक्तं ब्राह्मणं षट्पदास्वच्छावाकाय प्रणयन्ति षष्ठे ऽहन्षष्ठस्यैवाह्नो रूपेणाभि तष्टेव दीधया मनीषामित्यहरहः पर्यासः प्रजापतिर्वा अभितष्टीयं प्रजापतावेव तदहरहः प्रतितिष्ठन्तो यन्ति तदनिरुक्तं भवत्यनिरुक्त उ वै प्रजापतिः प्रजापतावेव तदहरहः प्रतितिष्ठन्तो यन्ति सा वा अत्रैकैव निरुक्तैक उ वै प्रजापतिः प्रजापतावेव तदहरहः प्रतितिष्ठन्तो यन्ति तेषामेतान्यच्युतानि भवन्ति पृष्ठं मैत्रावरुणस्य पर्यासावितरयोस्तेष्वेव तदहरहः प्रतितिष्ठन्तो यन्ति ॥ ७ ॥

दशर्चं भवति दशेमे प्राणाः प्राणानेव तद्यज्ञे च यजमानेषु च दधाति द्विसूक्ता होत्राणां मध्यंदिना द्व्युक्थस्यैव होतुः प्रत्युद्यमाया अथो संवत्सरो वै होत ऋतवो होत्राशंसिनस्तद्यद्द्वंद्वं समस्ता ऋतव आख्यायन्ते ग्रीष्मो वर्षा हेमन्त इति तस्माद्द्विसूक्ता होत्राणां मध्यंदिना अथो आत्मा वै होताङ्गानि होत्राशंसिनस्तद्यद्द्विगुणान्यङ्गानि भवन्ति तस्माद्द्विसूक्ता होत्राणां मध्यंदिनाः स्तोमातिशंसं प्रातःसवनेषु शस्त्वाहीनसूक्तानि मध्यंदिनेषु शंसन्ति चतुर्विंशे ऽभिजिति विषुवति विश्वजिति महाव्रतीये ऽहन्नहीनो[1] ह्येतान्यहान्यहीनसूक्तानि शस्त्वैकाहिकानि

1) So alle Hss. und C.

शंसन्ति पराञ्चीनि वा एतान्यहान्यनभ्यावर्तीनि भवन्ति तद्यदहीनसूक्तानि शस्त्वैकाहिकानि शंसन्ति प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एव पञ्च पञ्च सूक्तानि मैत्रावरुणः शंसति सर्वेषु च्छन्दोमेषु पशवो वै छन्दोमाः पाङ्क्ताः पशवः पशूनामेवाप्त्यै चत्वारि चत्वारि ब्राह्मणाच्छंसी चाच्छावाकश्च पशवो वै छन्दोमाश्चतुष्टया वै पशवो ऽथो चतुष्पादाः पशूनामेवाप्त्यै पञ्चाहावानि शस्त्राणि पशवो वा उक्थानि पाङ्क्ताः पशवः पशूनामेवाप्त्या ऐकाहिका उक्थयाज्याः प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एवानुवषट्कुर्वन्त्याकूतीनामेव शान्त्या आकूतीनां प्रतिष्ठित्या आकूतीनां प्रतिष्ठित्यै ॥ ८ ॥

॥ इत्येकोनत्रिंशो ऽध्यायः समाप्तः ॥

वसूनां वै प्रातःसवनं रुद्राणां माध्यंदिनं सवनमादित्यानां तृतीयसवनं तद्यदादित्यग्रहेण तृतीयसवनं प्रतिपद्यते स्वयैव तद्देवतया प्रतिपद्यते ऽथो धीतरसं वा एतत्सवनं यत्तृतीयसवनमथैष सरसो ग्रहो यदादित्यग्रहस्तेनैव तत्तृतीयसवनं सरसं करोति त्रिष्टुभमादित्यग्रहस्य पुरोनुवाक्यामन्वाह तस्या उक्तं ब्राह्मणमथ स्तुते पवमाने पशुना चरन्त्यत्र कालो हि भवत्यथो सवनस्यैव सरसताया अथ हविष्पङ्क्त्या चरन्ति तस्या उक्तं ब्राह्मणं वामदेव्यास्तृतीयसवन उन्नीयमानेभ्यो ऽन्वाह वामदेवो हि तृतीयसवन इन्द्राय सोमं प्रोवाच ता वा आवत्यो हरिवत्यो भवन्ति पुरोनुवाक्यारूपेण ता वा ऐन्द्रार्भव्यस्त्रिष्टुभो भवन्तीन्द्रमेव तदर्धभाजं सवनस्य करोति ता वै नवान्वाह दश न्वा अत्र चमसानुन्नयन्ति यथा तु प्रायणं तथोदयनमथ होत्राः संयजन्ति तासामुक्तं ब्राह्मणमन्धस्वत्यो मद्वत्यः पीतवत्यो जगत्यो याज्या जागतं हि तृतीयसवनं मद्वत्यो मद्वद्धि तृतीयसवनमनुवषट्कुर्वन्त्याकूतीनामेव शान्त्या आकूतीनां प्रतिष्ठित्या अथेडाथ होतृचमसस्तस्योक्तं ब्राह्मणमौपासनांस्तृतीयसवन उपास्यन्ति तेषामुक्तं ब्राह्मणमथ सावित्रग्रहेण चरन्ति तस्योक्तं ब्राह्मणं त्रिष्टुभं सावित्रग्रहस्य पुरोनुवाक्यामन्वाह

तस्या उक्तं ब्राह्मणमथ यदुक्थे अन्तरेणामीत्यात्नीवतस्य यजति तेन तौ होतारमनुसमश्नुवाते ॥ १ ॥

ऐन्द्राग्नान्युक्थ्योक्थानि भवन्ति तेषामुक्तं ब्राह्मणमथैतान्यैन्द्राणि जागतान्यहरहः शंसन्ति पशवो वै जगती जागताः पशवः पशूनामेवाप्त्यै तान्यच्युतानि स्युरिति हैक आहुः सवनधरणानीति वदन्तो ऽन्यान्यन्यानीति त्वेव स्थितमन्यदन्यद्ध्यहरूपयन्त्यथ वारुणं बार्हस्पत्यं वैष्णवमिति शंसन्ति जगती वा एतेषां छन्दस्त्रिष्टुबिन्द्रस्य तद्यच्छन्दसी विपरीते द्विदेवत्यताया ऐन्द्रावरुणमैन्द्राबार्हस्पत्यमैन्द्रावैष्णवमिति शंसन्ति ग्रहानिर्वैतैरनुशंसन्त्येवं हि ग्रहा गृहीता भवन्ति ॥ २ ॥

चर्षणीधृतं मघवानमुक्थ्यमिति मैत्रावरुणस्तस्योक्तं ब्राह्मणं वासिष्ठो ऽहरहः पर्यासो भवति वसिष्ठो हैतन्मैत्रावरुणीयायै तृतीयसवनं ददर्श तस्माद्वासिष्ठो ऽहरहः पर्यासो भवति ककुप्सु मैत्रावरुणाय प्रणयन्ति तृतीये ऽहंस्तेनो स ब्राह्मणाच्छंसिनो वशमेत्यथ चतुर्थे ऽहन्त्स्वे स्वे छन्दसि प्रणयन्ति स्वे स्व एव तच्छन्दसि प्रतितिष्ठन्तो यन्ति गायत्रीषु मैत्रावरुणाय प्रणयन्त्युष्णिक्षु ब्राह्मणाच्छंसिने ऽनुष्टुप्स्वच्छावाकायोत्तरोत्तरितायै तथैषां चतुर्भिश्चतुर्भिरक्षरैश्छन्दांस्यभ्युद्यन्ति पङ्क्तिषु मैत्रावरुणाय प्रणयन्ति पञ्चमे ऽहन्पाङ्क्तं हि पञ्चममहर्द्विपदासु षष्ठे ऽहन्प्रणयन्ति द्वैपदं हि षष्ठमहरथो गूर्दं[1] भद्रमुद्वंशपुत्रमिति सामानि कुर्वन्त्यथो द्विपदासहचराणि वै शिल्पानि भवन्ति तस्मादत्र शिल्पानि शस्यन्ते नेच्छिल्पेभ्यो गामेति ॥ ३ ॥

नाभानेदिष्ठेनात्र होता रेतः सिञ्चति तं मैत्रावरुणाय प्रयच्छति तत्स वालखिल्याभिर्विकरोत्यथैता वालखिल्या विहृताः शंसति पच्छः प्रथमे सूक्ते विहरति पर्वश एवैनं तत्संभरत्यर्धर्चशो द्वितीये द्वे वै पुरुषः[2] कपाले ते एव तत्संदधात्यृचमृचं तृतीये कृत्स्नमेवैनं तत्संभरति विपर्यस्येन्नाराशंसे तस्माद्विपर्यस्ता गर्भा जायन्ते ॥ ४ ॥

---

1) अगूर्दं BoKC. 2) पुरुष O.

ताक्ष्यें दूरोहणं रोहति वायुर्वै ताक्ष्यः प्राणो वै वायुः प्राणमे[1]वास्मिंस्तद्दधाति तं ब्राह्मणाच्छंसिने प्रयच्छति तं स सुकीर्तिना योनिना प्रतिगृह्णाति जातमथैतं वृषाकपिं पङ्क्तिशंसं न्यूङ्खं शंसत्यन्नं वै न्यूङ्खो जात एवास्मिंस्तदन्नाद्ये प्रतितिष्ठत्यथैतत्कुन्तापं यथाछन्दसं शंसति सर्वेषामेव कामानामाप्त्यै नाराशंसी रैभीः कारव्या इन्द्रगाथा भूतेछदः पारिक्षितीरेतशप्रलापमित्येतशो ह वै मुनिर्यज्ञस्यायुर्ददर्श स[2] ह पुत्रानुवाच पुत्रका यज्ञस्यायुरदर्शं तदभिलपिष्यामि मा मा दृप्तं मन्ध्वमिति ते ह तथेत्यूचुस्तद्धाभिललाप[3] तस्य ह ज्येष्ठः पुत्रो ऽभिसृप्य मुखमपिजग्राहादृपद्वै[4] नः पितेति तं होवाचापनश्य धिक्त्वा जाल्मास्तु पापिष्ठां ते प्रजां करोमि[5] यद्वै मे जाल्म मुखं नाप्यग्रहीष्यः शतायुषं गामकरिष्यं सहस्रायुषं पुरुषमिति तस्मादैतशायना आजानेयाः सन्तो भृगूनां पापिष्ठाः पित्रा हि शप्ताः स्वया देवतया स्वेन प्रजापतिना ॥ ५ ॥

आदित्याङ्गिरसीरुपसंशंसत्यादित्याश्च ह वा अङ्गिरसश्चास्पर्धन्त वयं पूर्वे स्वर्गं लोकमेष्याम इत्यादित्या वयमित्यङ्गिरसस्ते ऽङ्गिरस आदित्येभ्यः प्रजिघ्युः श्वःसुत्या नो याजयत न इति तेषां हाग्निर्दूत आस त आदित्या ऊचुरथास्माकमद्यसुत्या तेषां नस्त्वमेव होतासि[6] बृहस्पतिर्ब्रह्मायास्य उद्गाता घोर आङ्गिरसो ऽध्वर्युरिति तान्ह[7] प्रत्याचचक्षिरे[8] तमेताभिः शिशिक्षुस्तदेता अभिवदन्ति[9] ते ऽश्वं श्वेतं दक्षिणां निन्यु[10]रेतमेव य एष तपति तत उ हादित्याः स्वरीयुः स्वरेति य एवं वेद ॥ ६ ॥

दिशां क्लृप्तीः शंसति दिशो हास्मै कल्पन्ते जनकल्पाः शंसति

---

1) प्राण ए° LK. 2) so M; °युरदर्शत्स OoLK, °युरदर्श स B. 3) °पिललाप BLK. 4) मुखमभि° Oo. 5) करिष्यामि M. 6) होतास BLK, होता o Corr. 7) तान्न M. 8) प्रत्याचक्षिरे MC. 9) अभिवदन्तस् OoK. 10) निण्यु° LBK.

जना हास्मै कल्पन्ते प्रवल्हिकाः प्रतीराधानतीवादामाहनस्याः सर्वा वाचो वदति तस्मात्पुरुषः सर्वा वाचो वदत्येकैकामितरे पशवस्ता वा अष्टौ भवन्त्येताभिर्वै देवाः सर्वा अष्टीराश्नुवत तथो एवैतद्यजमाना एताभिरेव सर्वा अष्टीरश्नुवते कपृन्नरः कपृथमुद्दधातन यज्ञ प्राचीरजगन्तेति द्वे[1] तथा ता आनाचिप्यो भवन्ति[2] ता दश संपद्यन्ते दशदशिनी विराट्छ्रीर्विराडन्नाद्यं श्रियो विराजो ऽन्नाद्यस्योपाप्त्यै ॥ ७ ॥

दाधिक्रीं शंसति वाग्वै दाधिक्री वाचमेवास्मिंस्तद्दधाति पावमानीः शंसति पवित्रं वै पावमान्यः पुनात्येवैनं तत्तमच्छावाकाय प्रयच्छति तं स एवयामरुता चारयति जातं न्यूङ्खयति न्यूङ्खमानक इव वै प्रथमं चिचरिषुश्चरति[3] तदेनममृताच्छन्दसो ऽमृतत्वाय प्रजनयति ते ऽमृतत्वमाप्नुवन्ति ये षष्ठमहरुपयन्ति स्तोत्रियानुरूपौ शस्त्वा वालखिल्याः शंसत्यात्मा वै स्तोत्रियानुरूपौ प्राणा वालखिल्या अनन्तर्हिता उ हेमे प्राणास्तदाहुः कस्माद्वालखिल्या इति यद्वा उर्वरयोरसंभिन्नं भवति खिलमिति वै तदाचक्षते वालमात्रा उ हेमे प्राणा असंभिन्नास्तद्यदसंभिन्नास्तस्माद्वालखिल्याः ॥ ८ ॥

तार्क्ष्यं दूरोहणं रोहतीति तदुक्तं गायत्रीषु ब्राह्मणाच्छंसिने प्रणयन्ति द्वितीये ऽहंस्तेनो स मैत्रावरुणस्य वशमेति प्र मंहिष्ठाय बृहते बृहद्रय इति षडृचं द्विस्तावद्यावन्मैत्रावरुणस्य कार्ष्णो ऽहरहः पर्यासो भवति कृष्णो हैतदाङ्गिरसो ब्राह्मणाच्छंसीयायै तृतीयसवनं ददर्श तस्मात्कार्ष्णो ऽहरहः पर्यासो भवत्यनुष्टुप्स्वच्छावाकाय प्रणयन्ति तृतीये ऽहंस्तेनो स ब्राह्मणाच्छंसिनो वशमेत्यृतुर्जनित्रीयं त्रयोदशर्चं द्विस्तावद्यावद्ब्राह्मणाच्छंसिन एका चोप भारद्वाजो ऽहरहः पर्यासो भवति भरद्वाजो हैतदच्छावाकीयायै तृतीयसवनं ददर्श तस्माद्भारद्वाजो ऽहरहः पर्यासो भवति वैष्णवे विपर्यस्यत्यच्छावाकः पर्यासावितरौ द्वि-

---

1) M ins. एकपातिन्यौ. 2) तथा-भवन्ति om. M. 3) चिचर्षश्चरति LBMK.

पर्यासौ मैत्रावरुणश्च[1] ब्राह्मणाच्छंसी चैकपर्यासो ऽच्छावाकस्त्र्यच्युतपर्यासो ऽच्छावाकः प्रतिष्ठा वा अच्छावाकः प्रतिष्ठित्या एव ॥ ९ ॥

षट्त्रिंशतं मैत्रावरुणश्चतुर्विंशे शंसति चत्वारिंशतं ब्राह्मणाच्छंसी चतुश्चत्वारिंशतमच्छावाकस्तद्विंशतिशतं विंशतिशतं वा ऋतोरहानि तदृतुमाप्नोत्यृतुना संवत्सरं ये च संवत्सरे कामाः पञ्च पञ्च सूक्तानि मैत्रावरुणः शंसति सर्वेषु छन्दोमेषु पशवो वै छन्दोमाः पाङ्क्ताः पशवः पशूनामेवाप्त्यै चत्वारि सूक्तानि ब्राह्मणाच्छंसी शंसति प्रथमे छन्दोमे पशवो वै छन्दोमाश्चतुष्टया वै पशवो ऽथो चतुष्पादाः पशूनामेवाप्त्यै पञ्च पञ्चोत्तरयोः पशवो वै छन्दोमाः पाङ्क्ताः पशवः पशूनामेवाप्त्यै पञ्च सूक्तान्यच्छावाकः शंसति प्रथमे छन्दोमे पशवो वै छन्दोमाः पाङ्क्ताः पशवः पशूनामेवाप्त्यै षट्षडुत्तरयोः षड्वा ऋतवः संवत्सरः संवत्सरस्यैवाप्त्यै चतुराहावानि शस्त्राणि पशवो वा उक्थानि चतुष्टया वै पशवो ऽथो चतुष्पादाः पशूनामेवाप्त्यै षष्ठ एवाहन्मैत्रावरुणस्य पञ्चाहावं भवति पशवो वा उक्थानि पाङ्क्ताः पशवः पशूनामेवाप्त्या ऐकाहिका उकथयाज्याः प्रतिष्ठा वा एकाहः प्रतिष्ठित्या एवानुवषट्कुर्वन्त्याहुतीनामेव शान्त्या आहुतीनां प्रतिष्ठित्यै ॥ १० ॥

पञ्च छन्दांसि रात्रौ शंसन्त्यनुष्टुभं गायत्रीमुष्णिहं त्रिष्टुभं जगतीमित्येतानि वै रात्रिच्छन्दांसि पञ्चाहावा रात्रिर्वाजपेयस्य चातिरिक्तोक्थमुक्थस्यातिग्रहो रात्रिश्छन्दसश्छन्दस एव तदाह्वयन्त इति ह स्माह कौषीतकिरजामितायाः अथ यत्तिरोअह्न्यवतीं त्रिष्टुभमाश्विनोकथग्रहस्य पुरोनुवाक्यामन्वाह तिरोअह्न्यवान्प्रैषस्तिरोअह्न्या हि सोमा भवन्त्यथो बलं वै वीर्यं त्रिष्टुब्बलमेव तद्वीर्यं यजमाने दधाति चतुराहावान्याप्तोर्यामस्यातिरिक्तोकथानि भवन्ति पशवो वा उकथानि चतुष्टया वै पशवो ऽथो चतुष्पादाः पशूनामेवाप्त्यै द्वैत्रपत्याः परि-

1) मैत्रावरुणस्य च LBK.

धानीयाः कुर्वत इयं वै चेत्रं पृथिव्यस्यामदीनायामन्ततः प्रतिष्ठास्याम इत्यस्यामेव तददीनायामन्ततः प्रतितिष्ठन्त्यथ यत्तिरोअह्न्यवत्यस्त्रिष्टुभो याज्या भवन्ति तिरोअह्न्या हि सोमा भवन्त्यथो बलं वै वीर्यं त्रिष्टुब्बलमेव तद्वीर्यं यजमाने दधत्यनुवषट्कुर्वन्त्याकूतीनामेव शान्त्या आकूतीनां प्रतिष्ठित्या अथ हारियोजनेन चरन्ति तस्योक्तं ब्राह्मणं त्रिष्टुभं हारियोजनस्य पुरोनुवाक्यामन्वाह तस्या उक्तं ब्राह्मणमथ यदतिप्रैषस्य पुरोनुवाक्यामन्वाहावीर्यो ह वा उ स प्रैषो यो ऽपुरोनुवाक्यो ऽथो द्विदेवत्येषु वै पुरोनुवाक्या भवन्ति सर्वेषु च प्रस्थितेषु तस्मादस्य पुरोनुवाक्यामन्वाहाथ यदतिप्रैषमाह परमे वै तदहरभिवदति परमे वै तदहरभ्यारभ्य वसन्तीति ह स्माह कौषीतकिः परमे वै तदहरभ्यारभ्य वसन्तीति ह स्माह कौषीतकिः ॥ ११ ॥

॥ इति त्रिंशो ऽध्यायः समाप्तः ॥

॥ समाप्तं च कौषीतकिब्राह्मणम् ॥

---

# Verzeichniss der im Texte citirten Lieder und Verse.

## 1) aus dem Rigveda.



---

*) vs. 1.

*) vs. 1—8.

*) vs. 1.

---

*) vs. 1—11.

*) vs. 1—4. **) vs. 1. ***) vs 19.

| | | |
|---|---|---|
| bṛhad vayo hi bhânave | 5, 16 | 24, 5 |
| brahmaṇâ te brahmayujâ yunajmi | 3, 35, 4 | 29, 4 |
| bhavâ no agne sumanâ upetau | 3, 18, 1 | 8, 4 |
| bhuvo yajñasya rajasaç ca netâ | 10, 8, 6 | 12, 7 |
| maruto yasya hi kshaye | 1, 86 | 26, 17. 28, 3*) |
| marutvâ͝ indra mîḍhvaḥ | 8, 76, 7-9 | 23, 6 |
| marutvâ͝ indra vṛshabho raṇâya | 3, 47 | 23, 1 |
| mahaçcit tvam indra yata etân | 1, 169 | 26, 12 |
| mahâ͝ indro nṛvad â carshaṇiprâḥ | 6, 19 | 21, 4. 26, 12**) |
| mahî dyâvâpṛthivî iha jyeshṭhe | 4, 56 | 23, 3 |
| mahî dyauḥ pṛthivî ca naḥ | 1, 22, 13-15 | 8, 1.***) 26, 13 |
| mâ cid anyad viçaṃsata | 8, 1, 1 | 23, 7. 29, 5 |
| mâ bhema mâ çramishma | 8, 4, 7 | 29, 5 |
| mitraṃ vayaṃ havâmahe | 1, 23, 4 | 28, 3 |
| mûrdhânaṃ divo aratiṃ pṛthivyâḥ | 6, 7 | 23, 3 |
| ya eka id dhavyaç carshaṇînâm | 6, 22 | 25, 5. 6 |
| yaj jâyathâ apûrvya | 8, 89, 5 | 24, 5 |
| yajñasya vo rathyaṃ viçpatiṃ viçâm | 10, 92 | 19, 9. 22, 2 |
| yajñena yajñam ayajanta devâḥ | 1, 164, 50 | 8, 2 |
| yajñena vardhata jâtavedasam | 2, 2 | 19, 9. 20, 3 |
| yat pâñcajanyayâ viçâ | 8, 63, 7 | 23, 1 |
| yad indra nâhushîshv â | 6, 46, 7 | 23, 2 |
| yad indra yâvatas tvam | 7, 32, 18 | 22, 4 |
| yad dyâva indra te çatam | 8, 70, 5 | 22, 4. 25, 6 |
| yad dha prâcîr ajaganta | 10, 155, 4 | 30, 7 |
| yad baṃhishṭhaṃ nâtividhe sudânû | 5, 62, 9 | 18, 13 |
| yad vâhishṭhaṃ tad agnaye | 5, 25, 7-9 | 7, 9.†) 24, 1 |
| yaṃ tvaṃ ratham indra medhasâtaye | 1, 129 | 23, 6 |
| yam indra dadhishe tvam | 8, 97, 2. 3 | 24, 6 |
| yame iva yatamâne yad aitam | 10, 13, 2 | 9, 3 |
| yas te sâdhishṭho 'vase | 5, 35 | 24, 6 |
| yas tvâ svaçvah suhiraṇyo agne | 4, 4, 10 | 8, 2 |
| yaḥ satrâhâ vicarshaṇiḥ | 6, 46, 3 | 25, 6 |
| yâ ta ûtir avamâ yâ paramâ | 6, 25 | 22, 2. 24, 2 |
| yâ te dhâmâni havishâ yajanti | 1, 91, 19 | 7, 10 |
| yâvat taras tanvo yâvad ojaḥ | 7, 91, 4-6 | 25, 2. 26, 11 |
| yukshvâ hi devahûtamân | 8, 75 | 22, 3 |
| yuñjate mana uta yuñjate dhiyaḥ | 5, 81 | 20, 2. 22, 1. 25, 9 |
| yuñjanti bradhnam arusham | 1, 6, 1 | 25, 15 |
| yudhmasya te vṛshabhasya svarâjaḥ | 3, 46 | 22, 8 |
| yuvaṃ vastrâṇi pîvasâ vasâthê | 1, 152, 1 | 18, 13 |
| yuvânâ pitarâ punaḥ | 1, 20, 4-6 | 26, 13 |
| yuvâ suvâsâḥ parivîta âgât | 3, 8, 4 | 10, 2 |
| ye tvâhihatye maghavann avardhan | 3, 47, 4 | 15, 3 |
| yo jâta eva prathamo manasvân | 2, 12 | 21, 4. 22, 4 |

*) vs. 1. **) vs. 1 – 9. ***) vs. 13. †) vs. 7.

2) aus dem Atharvaveda.*)



3) aus anderen Quellen.



4) Yajñagâthâ.



5) Yajus, praisha, nigada u. s. w.



---

*) Die aus dem AV. entnommenen Verse zeigen im Çâṅkhâyana Çrauta Sûtra oft bedeutende Abweichungen von dem Texte der Ausgabe; diejenigen, in denen sich solche Varianten finden, sind oben durch einen Stern bezeichnet.

devasya tvâ savituḥ prasave 'çvinor bâhubhyâṃ pûshṇo hastâbhyâṃ pratigṛhṇâmi
pṛthivyâs tvâ nâbhau sâdayâmy adityâ upasthe
agnesh ṭvâsyena prâçnâmi
çântir asi
indrasya tvâ jaṭhare sâdayâmi 6, 14
yajamâna hotar adhvaryo 'gnîd brahman potar neshṭar utopavaktaḥ 28, 5 (nigada)
çoṃsâvo 14, 3 (çoṃsâmo daiva: Adhv.)
çravad va indraḥ çṛṇavad vo agniḥ 28, 6
svâhâ devâ âjyapâ jushâṇâ agna âjyasya havisho vyantu 3, 4
havir agne vîhi 13, 3
havir ajushata havir ajushata 3, 8
hotâ yakshad dhotâ yakshat 13, 7

---

## Eigennamen.

## Corrigenda:

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| S. | 1 | Z. | 12 | für | ईळितवत्यौ | lies | ईडितवत्यौ |
| „ | 2 | „ | 21 | „ | जङ्गनद्ग्ने | „ | °द्ग्ने: |
| „ | 5 | „ | 13 | „ | श्रीर्वि° | „ | क्ष्रीर्वि° |
| „ | 11 | „ | 18 | „ | °राथन्तरं | „ | °राथंतरं |
| „ | 11 | „ | 19 | „ | रथन्तरं | „ | रथंतरं (zweimal; ebenso 89,22.90,9.91,16.93,25.96,12) |
| „ | 12 | „ | 1 | „ | °ग्निवै | „ | °ग्निर्वै |
| „ | 13 | „ | 23 | „ | द्वन्द्वं | „ | द्वंद्वं |
| „ | 15 | „ | 2 | „ | रूपं | „ | रूपम् (ebenso 15, 9. 16, 6) |
| „ | 20 | „ | 7 | „ | मध्यन्दिने | „ | मध्यंदिने |
| „ | 22 | „ | 13 | „ | °रेवैष | „ | °रेवैषा |
| „ | 34 | „ | 10 | „ | विज्ञात | „ | ऽविज्ञात |
| „ | 45 | „ | 9 | „ | निकेतु° | „ | नि केतु° |
| „ | 76 | „ | 2 | „ | श्रीर्वि° | „ | क्ष्रीर्वि° |
| „ | 82 | „ | 2 | „ | यन्त | „ | यन्तं |
| „ | 90 | „ | 2 | „ | °ड्डुपवन्धुरेष्ठा | „ | °ड्डुप वन्धुरेष्ठा |
| „ | 109 | „ | 14 | „ | यजैर्देव | „ | यज्ञैर्देव |
| „ | 117 | „ | 13 | „ | यः सर्वाणि | „ | यत्सर्वाणि |
| „ | 119 | „ | 10 | „ | °रुन्द्‌ध | „ | °रुन्द्ध |
| „ | 122 | „ | 21 | „ | द्वन्द्वं | „ | द्वंद्वं |

Druck von G. Kreysing in Leipzig.

